N.A.

Saptā tra—

सप्त० —

Sanskrit

Paper - Handwritten

N.A. (very old)

23 folio (Folio No. 1 & 3-6 & 24 onwd missing)

10.2" X 4.4"

Incomplete

सोवैवस्वतमन्वंतरेजंबूद्वीपेभरतखंडे आर्य्यावर्तैकदेशे अमुकक्षेत्रे अमुकसंव
त्सरे अमुकायनगतसूर्य्येमहामांगल्यप्रदे अमुकमासे अमुकपक्षे अमुकतीथौ
अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकगोत्रापत्योऽहं अमुक
नामोऽहंपितृतर्पणंकरिष्ये ॥इतिसंकल्पः॥ अथसंन्यासग्रहणपद्धतिः प्रथमे
अहंमातापितृभ्रातृभगिनिपुत्रांप्रार्थयंतेहो सर्वेपरिवाराः अहंसंन्यासंकरोमि तदनं
तरमात्मगृहग्रामादिप्रदक्षिणांकृत्वा तत्रग्रामांतरंगत्वा क्रोशप्रमाणांतत्र स्ना
नंकुर्य्यात देवार्चनादिकर्मकृत्वा दैवर्षि आदिस्मरणांकृत्वा पुनःगुरुंहप्रयतेप्रांतंमु



भानुतनि

सन्न० उ० शीलं सुवंशं ब्रह्मकुले सर्वविक्रियादिरहितः देहाद्यऽहंकाररहितः लोभमोहादिषड्
२ र्म्मादिरहितः आत्मदर्शी ब्रह्मज्ञानपरायणः सम्यक्शुद्धचैतन्यस्वरूपः यथोक्त
विधिवत्गुरुस्थाने इदं उवाच स्वामिनं कृत्वा संन्यासं प्रार्थयेत् भो गुरो त्वं ब्रह्माविष्णुरुद्र
स्वरूपः त्वत्प्रसादेन संन्यासं करोमि पुनः गुरुणा उच्यते भो पुत्र संन्यासं न कर्त्तव्यं
गृहाश्रमं कुरु गृहाश्रमेण सर्वान्धर्मान्प्राप्नोति पुनः शिष्यो वाच मया गृहाश्र
मं न कर्त्तव्यम् गृहाश्रमे अनेक शोक मोहादि कर्मबंधनं भवति तस्मात्कारणा
त् गृहाश्रमं न कर्त्तव्यम् त्वच्चरणप्रसादेन हरिस्मरणं करोमि पुनः गुरुवाच २

स्त्रगंधपुष्पधूपदीपनैवेद्यतांबूलदक्षिणादिभिःसंपूज्यार्घ्यं विसर्जयेत् फल्गुतीर्थेगयाशीर्षे पितृपिंडं
करोम्यहं ममपितुःस्वर्गवासोत्स्यात्पिंडान्विसर्जयेत् ॥

मातामहःप्रमातामहःवृद्धःप्रमातामहःपिंडत्रयंदद्यात् इदंमृत्तिर्गयाइदमुदकंफल्गुती
र्थस्यपिंडप्रेतभिर्लोगच्छ १ ॐअस्मिन्मेआत्माश्राद्धेदेवतात्रयंआत्मापितुःपरमात्मापि
तुःवृद्धःपरमात्मापितुःपिंडत्रयंदद्यात् इयंमृत्तिर्गयाइदमुदकंफल्गुतीर्थस्यपिंडप्रेतभि
र्लोगच्छ २ गयास्थितोजनार्दनदेवोममपिंडगृहीतं तत्समयेगयासित्वंहरामिच्छ
त्वाविष्णुःतत्समास्मिभवः इत्यष्टश्राद्धविधिःसमाप्तं ततःसव्येन ॐततोब्रह्मीमुहूर्ते तत्पश्चात्
वीर्याहोमंकुर्यात् आचार्यःउत्तराभिमुखंभूत्वा चतुःकोणंवेदिकांकृत्वापूर्वे
न अग्निस्थापनंकृत्वा अथवैश्वानरलोकवासः भारद्वाजगोत्रात्त्र्यंतीर्थिवा
ॐअपवित्रःपवित्रोवाइत्याचम्य ततोगणेशंध्यायेत्

सुनिर्मलं पाशहस्तं महातेजा मकरध्वजलांछनम् नीलवर्णे शायनस्थं हंसयानं महाबलं वरुणं च
नमाम्यहं सर्वलोकपालकं लोकपालैश्च सहितं वरुणं त्वामहं परिपूजये इतिवरुणध्यानं १२

मु.सं.
७ रसमन्वितं सप्तद्वीपसमायुक्तं वेदाहरसैर्भाग्यैर्भोमलोकमुच्यते अथ वैश्वानरलोक
वास एकैव तिष्ठंति स्वर्गं तु रसं पातालमेव च द्वितीयं मर्त्युलोके च अग्निवासो विधी
यते १ आकाशे वहते होमं पाताले च धनक्षयं धनधान्यकरो देवो मर्त्यलोके तु
पावकः २ इति अग्निचक्रं वैश्वानरलोकवासः॥ अथ कलशस्य मुखे विष्णुः कं
ठे रुद्र समाश्रिताः कुक्षौ तु वरुणाः प्रजापति स्थाने ग्रहदेवता॥ इति कलशस्थापनं वे
दिस्थाने मध्ये तु भास्करं विद्यात् शशिपूर्वदक्षिणे लोहितं विद्यात् बुधः पूर्वोत्तरेण
तु उत्तरेण च गुरुं विद्यात् पूर्वे शौक्रं भार्गवं पश्चिमे च शनिं विद्यात् राहुर्दक्षिणा ७
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः अंगेश्च सहिताः सर्वे कलशं तु समाश्रिताः अत्र गायत्री
सावित्री सरस्वती शांतिः पुष्टिः आयांतु देवपूजार्थं दुरितक्षयकारकाः सर्वे समुद्राः सरितः तीर्थानि जल

[illegible]नामस्थापनं॥

पश्चिमेचउत्तरकेतुं॥इत्येवंग्रहस्थापनं॥ॐउद्दीपाद्यस्वजा[illegible]निर्ऋतानलेदृष्टिमेवच
हष्टिवन्हितजातानामि स्वाहूतिंकस्यदीयते १ आग्नेत्वंमध्येदृश्विप्रास्तुत्वंसर्वदेव
ता विपरितेचमुत्वंमत्वा स्वाहुतिंकस्यदीयते २ अंबुनाकरमादायवन्हिकुर्या
त्प्रदक्षिणां हव्यवाहनेसलिलंदृष्ट्वासन्मुखोभवति ३ ॐविष्णुर्विष्णुर्विष्णुः
अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः येभूताविघ्नकर्तारस्तेनश्यंतुशिवा
ज्ञया अपवित्रःपवित्रोवासर्वावस्थांगतोऽपिवा यःस्मरेत्पुंडरीकाक्षंसबाह्या
भ्यांतरंशुचिः ॐआवाहयामि देवदेवपुरुषमहात्वंसुरासुरंब्रह्माहरिश्चरुद्रश्चदेवा

कंठे त्रिगुणितं तंतुसंवेष्ट्य श्वेतवस्त्रयुग्मं परिधाय तस्योपरि अक्षतनारिकेलपुत्रपुंगीफलपुत्रं वा स्थं वं कं
स्थाप्य कुंकुमेन कर्पूरं कस्तूरीं चैव दापयेत् स्रग्दामवेष्टितग्रीवं नारिरत्नप्रवालकैः एतैर्लक्ष्मसहितं कुंभं मंडले
न संस्थापयेत् धूपं दीपं नैवेद्यं ताम्बूलं समर्पयामि नमः पश्चात्पंचपुष्पांजलिं दद्यात् इति कलशस्थापनविधिः

सप्त॰ ज्वा धिदेव सन्मुखं भव त्वं देववरदो भव पारसकुंडेस्मिन् स्तोल नाथ भवत्वं चित्ते त्वं हवि — वैश्वानरावाहनं
८ दा हतं द्वादशास सप्तजिह्वाप्रियं भव पवनवाहन वैश्वानर देवतां इहागच्छ इहातिष्ठ
सुप्रियो भव अग्निरि माता वसुमाता पिता सांडिल्यगोत्रस्य सप्तजिह्वा वैश्वानर देव
ता यागछ पूर्वदिशास्थितां दक्षिणास्थितां पश्चिमदिशास्थितां उत्तरदिशास्थितां भ
स्थिरो भव वरको ऽहं देवप्रति सर्वे स्थितो ॥ इति वैश्वानरस्यावाहनं ॥ प्रथमे काष्ठभक्ष्यं
ति द्वितीये घृतमेव च तृतीये जवभक्ष्याणां चतुर्थे तिलतंडुलं पंचमे दधिभक्ष्यंति ष
ष्ठमं क्षीरमेव च सप्तमे शर्कराभक्ष्यंति सप्तजिह्वा प्रकीर्तिता ॐ पूर्वोऽहं जातः पूर्वदह ८
कलशाग्रे मांडवं संस्थाप्य शंखोपरि मंडलम् दूर्वाप्रदर्भ गंधपुष्पाक्षतैः संपूज्य कलशोदीपं दद्यात् संपूर्णकलशादि ७

ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहा १
ॐ विष्णवे स्वाहा ॐ रुद्राय स्वाहा ३

ग्निस्थापनं कृत्वा पूर्ववत् मंत्रं पठेत् ततः पंचप्राणाहुतिं दद्यात् ॐ भूः स्वाहा इदं भूवः घृताहुति
ॐ भुवः स्वाहा ॐ भूर्भुवः स्वाहा इदं वायवे ॐ इंद्राय स्वाहा इदं सूर्याय ॐ अग्नये स्वाहा
इदं अग्नये ॐ प्रजापतये स्वाहा इदं प्रजापतये ॐ इंद्राय स्वाहा इदं मिंद्राय ॐ सोमाय स्वा ८
हा इदं सोमाय ॐ सूर्यादिग्रहकेतुनवग्रहाय स्वाहा ॥ इति प्रथमे घृताहुतिं हुत्वा ॥
स्थान ३ अथ शाकल्यहोमः ॐ प्राणापानसमानोदानमे शुध्यंतां ज्योतिरहं वीर्य्याविपाप्मा
वेभ्यः भूयासं स्वाहा इदं मनोबुद्धिभ्यः ॐ शब्दस्पर्शरूपरसगंधमे शुध्यंतां ज्योतिरहं वी
र्य्याविपाप्मा भूयासं स्वाहा इदं शब्दस्पर्शादिभ्यः ॐ अस्थिमांसरुधिरमेदमज्जा
इदं प्राणापानादिभ्यः ॐ मनोबुद्धिचित्त अहंकारश्चान्तःकरणो मे शुध्यंतां ज्योतिरहं वीर्य्याविपा

स्था २ … चतुष्टयं १

सप्त॰व॰ शुक्रामेशुध्यंतांज्योतिरहंवीर्य्याविपाप्माभूयासं स्वाहा २ इदं अस्थिमांसादिभ्यः ॥ ॐ
९ श्रोत्रचक्षुस्त्वजिह्वाघ्राणामेशुध्यंतांज्योतिरहंविर्य्याविपाप्माभूयासं स्वाहा ३
इदं श्रोत्रादिभ्यः ॥ ॐ वाक्पाणिपादपायूपस्थामेशुध्यंतांज्योतिरहंवीर्य्याविपाप्मा
भूयासं स्वाहा ३ इदं वाक्यादिभ्यः ॐ श्वेतपीतरक्तलोहितपिंगलामेशुध्यंतांज्यो
तिरहंवीर्य्याविपाप्माभूयासं स्वाहा ३ इदं श्वेतपितादिभ्यः ॥ ॐ क्षुत्पिपासातृष्णा
मेशुध्यंतांज्योतिरहंवीर्य्याविपाप्माभूयासं स्वाहा ३ इदं क्षुत्पिपासादिभ्यः ॥ ॐ काम
क्रोधलोभमोहहिंसामेशुध्यंतांज्योतिरहंवीर्य्याविपाप्माभूयासं स्वाहा ३ इदं का ९

मक्रोधादिभ्यः ॥ ॐ धनधान्यजमस्ऽजमकीर्त्तिर्मे शुद्ध्यन्तां ज्योतिरहं वीर्यो विपाप्मा भूया
सं स्वाहा इदं धनधान्यादिभ्यः ॥ ॐ अन्नमयप्राणमयमनोमयआनन्दमयविज्ञा
नमयज्ञानमयशरीरमयसर्वमयमे शुद्ध्यन्तां ज्योतिरहं वीर्यो विपाप्मा भूयासं
स्वाहा इदं अन्नमयादिभ्यः ॥ ॐ मनसावाचाकर्म्मे शुभाशुभकर्म्मयत्कृतं मे शुद्ध्यन्तां ज्यो
तिरहं वीर्यो विपाप्मा भूयासं स्वाहा इदं मनसादिभ्यः ॥ ॐ सर्वेभ्यो विश्वेभ्यो देवेभ्यः
५२ स्वाहा ॐ रुद्राय स्वाहा इदं रुद्राय ॥ ॐ विष्णवे स्वाहा इदं विष्णवे ॥ ॐ ब्रह्मणे स्वाहा इदं ब्रह्म
णे ॐ सोमाय स्वाहा इदं सोमाय ॥ ॐ ऋग्वेदविधानाय स्वाहा ॐ यजुर्वेदविधानाय

श्रीफलहुतेन

सन्न्या° स्वाहा३ ॐ सामवेदविधानाय स्वाहा२ ॐ अथर्ववेदविधानाय स्वाहा३ ॐ देहदहिछे
१० दंदह्यात् अर्पितलक्ष्मीनारायणप्रीत्यर्थे होमः कर्तव्यं मे शुध्यंतां ज्योतिरहं वि
रजाविपाप्माभूयासꣳ स्वाहा३ ॐ मृत्कात्माप्राणापंचाकृतिंहृत्वा मे शुध्यंतां ज्योतिर
हं विरजाविपाप्माभूयासꣳ स्वाहा३ ॐ पीतोऽस्मत्सुखदुःखमानापमानलिङ्गात्ल
स्यषड्कर्मादिरहितसर्वेभ्यः स्वाहा२ ॐ अप्रमत्तवृत्तसर्वकर्मरहितानि विश्वसुख
रूपेभ्यः सन्न्यासं करोमि ॐ भूर्भुवः स्वः ब्रह्मवीर्यसमुद्भवं ॐ ब्रह्मनामप्रभावेनाश्रि १
वसंध्यासतानिचरीयते मस्तके स्थाने शि[illegible]खावं धनं करोम्यहं ॥ इति शिखावेध

ॐ ब्रह्मनामसहस्राणि विष्णुनामशतानि च ह्रीयते मस्तके स्थाने शिखाछेदं करोम्यहं २
ॐ ब्रह्मपुत्री शिखा चैव हिमालयरूपा तपस्विनी मस्तके चक्रांतं स्थानं गच्छ देवि नमोऽस्तु ते ४

नमंत्रः ॐ ब्रह्मनामसहस्राणि विष्णुनामशतानि च शिवमंत्रप्रभावेन यज्ञोपवी
तउतारणामंत्र ॥इति यज्ञोपवीतउतारणामंत्रः॥ अथ शिखाछेदनमंत्रः ॐ मृत्युकोहं
जडोहं सोहं हंसः ॥इति शिखाछेदनमंत्रः॥ ॐ शिखा ब्रह्मपुत्री मातंगी तपस्विनी तेजव
ती ह्रीयते मस्तके स्थाने शिखाहोमं करोम्यहम् ॥इति शिखाहोममंत्र॥ अथाचमनं॥
उदकस्पर्शं ॐ ब्रह्माशांति विष्णुशांति रुद्रःशांति द्यौःशांतिः पृथ्वीशांतिः आप
शांतिः औषधयशांतिः वनस्पतयःशांतिः सामशांतिः शांतिरेधी स्वाहा शां
तिः केशोभिषेचनं शिखाकलशाभिमंत्र ॐ श्रीं ह्रीं श्रीं जयजय लक्ष्मीप्रिया
पश्चाद्दार्चयेत्तु तर्जन्यंगुष्ठाभ्यां दर्भं गृहीत्वा शिष्यमाहयशंखोदके नमानि मंत्रेणाभिषिंचयेद्यथा ४

समं॰व॰ यन्निप्रमुदितश्चेतसे लक्ष्मीश्रीधायई देहाय ॐ क्लीं श्रीं ह्रीं नमः ब्रह्मा क्षमि: जगन्नीश्वरः
११ नृसिंहो देवता ह्रां ह्रीं दीक्षा चक्राग्रभोरवोबुजधरं गदारवङ्गं प्रवालरश्मिकमलाके
रेण श्रीलक्ष्मीनृसिंहप्रीत्यर्थं यज्ञोपवीतशिखाच्छेदनं संपूर्णं हृदिमध्येपानं करो
मि तदनंतर गुरुहंसदीक्षा दद्यात् ॐ ह्रीं ब्रह्म हंसः सोहं स्मि परमहंसः तत्वमसि
॥इति हंसदीक्षा॥ ईडके मंडल करमध्ये दीपते वह्निकाश्रमदीक्षांगभिक्षार्थं सर्वक
र्मा कर्मशुभाशुभपरित्यज्य ॐ विष्णुर्विष्णु[illegible] सोहं ज्योतिर्भवति परम
हंसस्वरूपो नाम धारिणो भवेत् तत्पदब्रह्मो हं केवलब्रह्मो हं जरामरणवर्जितो हं ११
आचार्येण गुरुसमीपं आनीयात् ॥ ॐ ह्रीं भिक्षापति ग्राहि ॥इति भिक्षापतिग्रहणमंत्रः॥ ॥४॥

चिन्मात्रस्वरूपोहं यथाकृतरूपधरोस्मि मत्वा सर्वसंकल्पैः लोभमोहादिरहितः सर्वकर्मपरित्यज्य ॥ इति वीर्याहोमसमाप्तम् ॥ अथ दीक्षामंत्रमाह पश्चिमाम्नायदीक्षा ॐ सोहं हंसः अथ पूर्वाम्नायदीक्षा ॐ ब्रह्मोस्मि अहं ब्रह्मोस्मि अथ उत्तराम्नायदीक्षा ॐ सोहं तत्वमसि अथ दक्षिणाम्नायदीक्षा ॐ अहं तत्वमसि सोहं परमहंसः सोपानैः भुवःजानुनी सःगुह्ये सोनाभौ सोहृदये सं कंठे हे ललाटे स्वःशिरसे सोहं हृदयाय नमः हंसं सं शिरसे स्वाहा तत्वमसि शिखायै वौषट् ॥ इति परमहंसदीक्षान्यास संपूर्णं ॥ अथ दिगंबर दीक्षाएकादशाक्षरः ॐ सोहं हंसः सो

सप्त॰च॰ हंदिगंबरोहं सोहंपादौहंसोजानुनि हंसंगुह्ये सोहंनाभौ हंसोहृदये हंसःकंठे
१२ हंललाटे हंरवंशिरसे हंहृदयायनमः हंरवंहंसोंशिरसेस्वाहा हंरवंशिखायैवौषट्
हंरवंस्वायफट् इतिदिगंबरदिशान्याससंयुक्तं अथपरिक्षामाह ईतत्त्वपदःत्वंप
दःअसीपदः तत्त्वपदब्रह्मःत्वंपदमाया असीपदज्ञान तत्त्वपदममलमखंडम त्वं
पदनेतिनेतिगुरुकरणं असीपदममलमैक्य अघटितसंस्कारविघटितविचित्रविवे
कंकःचिन्तकःकिंगर्विस अघटितघटितंरवल्वितिसर्वोत्मपश्यतियंविधिल्लोकंतत्त्व
पदंगच्छतिकस्मिन्लोके ममहदःअमहदः इतिएवं[illegible]दिकदित्वेदेवप्रपंचतजितं १२

यःपुरुषममपदमजितसुखिनोनस्य अवधूतमार्गी अनमध्येममस्तहृथः तर्कर्ते अग्रे
रूपाहरतापेन असीपदलमितोसुखिनोतेनजन्ममृत्युनमेचिन्नावंधमोक्षस्तुमा
स्तुमं कथंसोहमिरेचिन्ननामरूपकत्वंममः इतिपरिस्थापद्धति ॐअस्यश्रीगुरुषोड्शा
व७ रमंत्रस्यविष्णुऋषिःपरमात्मादेवतापरब्रह्मऋषिः ग्यात्रिछंदःपरमात्मादेवताहं
इतिबीजंसंशक्तिःसोहंइतिकीलकंममजन्ममृत्युरहितःममसमस्तकर्मसंन्यस्तोहं
जपेविनियोगः अथन्यासः ॐभूःसंन्यस्तोहंअंगुष्ठाभ्यांनमः ॐभुवःसंन्यस्तोहंतर्जनी
निभ्यांनमः ॐस्वःसंन्यस्तोहंमध्यमाभ्यांनमः ॐभूर्भुवःसंन्यस्तोहंअनामिकाभ्यांनमः

न्या१

सप्त०त्र० ॐ जनः संन्यस्तोहं कनिष्ठिकाभ्यां नमः ॐ तपः संन्यस्तोहं करतलकरपृष्ठाभ्यां नमः
ॐ भूः संन्यस्तोहं हृदयाय नमः ॐ भुवः संन्यस्तोहं शिरसे स्वाहा ॐ स्वः संन्यस्तोहं शि
१२ खायै वषट् ॐ भूर्भुवः संन्यस्तोहं कवचाय हुं ॐ जनः संन्यस्तोहं नेत्रत्रयाय वौषट्
ॐ तपः संन्यस्तोहं अस्त्राय फट् ॐ पुरारापुरुषोत्तमाय नमः ॐ विष्णुर्विष्णुर्विष्णुः
परमात्मा देवता सोहं स्वरूपमस्थानं ॐ भूः संन्यस्तोहं ॐ भूर्भुवः संन्यस्तोहं ॐ स्वः सं
न्यस्तोहं ॐ महः संन्यस्तोहं ॐ जनः संन्यस्तोहं ॐ तपः संन्यस्तोऽहं इति त्रिरूर्ध्ववाहुः कृत्वा
उच्चरेत ॐ नत्वशिवायगायत्र्यासहयज्ञोपवीतेनं उत्याज्य ॐ भूर्भुवः स्वः स्वाहा इति १२

अप्सुजलेनसहजुहुयात् अनयासर्वमङ्गलेभ्योविं चित्कारायस्वाहा ॐ इं ह्रोऽसि
वस्त्रोऽसिरक्तस्त्रोऽसि पुच्छैःषराविसैःषरा चिरैःषरा लोकैःषरा शरीरैःषरा
स्नायैःषरा त्वचैःषरा रोमैःषरा कर्णैःषरा नासिकैःषरा चक्षुषरा जिह्वैः
षरा इंद्रियैःषरा मांसैःषरा अस्थिषराः सर्वकर्मसंन्यस्तोऽहं चिदाभासस्वा
त्माहिरण्यगर्भप्रतिमः स्वःसोऽहंकार्यमित्युच्यते हिरण्यगर्भमार्तण्डगार्हपत्या
ग्निरंह्रोतन्यदरूपं ॐ विज्ञानात्माप्रज्ञानपुरुषः ॐ अहंब्रह्म अहं क्लीं ॐ ह्रीं मूलबीजंज्ञा
नसंस्कारं ॐ अच्युतोऽहमनन्तोऽहंगोविंदोऽहमहंहरिः ... मासवलंब्रह्मप्रज्ञान

शिवायनमः शिवादिगुरुपर्य्यंतंनत्वातीर्थंदेउस्थाप्ययावत्स्नानकालोभवेत् ताव
त्कुरुचरणांबुजंशिरसिधारयेत् ततोहृदयकमलमध्येपरंब्रह्मध्यात्वा गंगोदकेनस्ना
त्वाअथवाजयमुनोदकेनस्नात्वाशुचिर्भूत्वाप्राणायामंषडक्षरेण विधिवत्स्नानंसमा ग २.
चरेत्संध्यावंदनंकुर्य्यात् ॐमंडूकायनमःरुद्रायनमः कूर्म्मायनम आधारशक्तयेन
मः अनंतायनमः अथासनशुद्धिंकृत्वा ॐपृथिव्यामेरुपृष्ठऋषिःकूर्म्मोदेवतासुत
लंछंदःआसनेविनियोगः ॐपृथ्वीत्वयाधृतालोकादेवीत्वंविष्णुनाधृतात्वंचधार
यमांदेवीपवित्रंकुरुचासनं अपसर्प्पंतुयेभूताभूताभूमिसंस्थितायेभूताविघ्नकर्त्ता
ये।

सप्त॰ च
१५

रत्नेनमंत्रं त्रिशिवाज्ञया अथकरन्यासः ॐ भूः ज्ञानात्मने तुषारवर्णाय अंगुष्ठाभ्यां न
मः ॐ भुवः प्रजापत्यात्मने स्फटिकवर्णाय तर्जनीभ्यां नमः ॐ स्वः सूर्यात्मने श्यामवर्णा
य मध्यमाभ्यां नमः ॐ महः ब्रह्मात्मने नीलवर्णाय अनामिकाभ्यां नमः ॐ जनः ज्ञाना
त्मने कृष्णवर्णाय कनिष्ठिकाभ्यां नमः ॐ तपः सत्यात्मने रक्तवर्णाय करतलकरपृष्ठा
भ्यां नमः ॐ भूः ज्ञानात्मने तुषारवर्णाय हृदयाय नमः ॐ भुवः प्रजापत्यात्मने स्फटि
कवर्णाय शिरसे स्वाहा ॐ स्वः सूर्यात्मने श्याम[illegible]र्णाय शिखायै वषट् ॐ महः ब्रह्मात्म
ने नीलवर्णाय कवचाय हुं ॐ जनः ज्ञानात्मने कृष्णवर्णाय नेत्रत्रयाय वौषट् ॐ तपः १५

सत्यात्मने रक्तवर्णाय स्वाहा फट् इति करन्यासः प्रणावेन व्यापकं कृत्वा अथ प्राण
वस्यांतर्यामि ऋषिः देवी गायत्री छंदः परमात्मा देवता प्राणायामे जपे विनियोगः ला
नगोत्रस्य ब्रह्मपुत्रकः श्वेतवर्ण उदात्तस्वरः ज्ञानाग्निमुखं ॐ बीजं ॐ सं शक्तिः मं की
लकं मोक्षार्थे जपे विनियोगः ॐ अथ प्राणायामाय नमः ॐ भूः ॐ भुवः ॐ स्वः ॐ म
हः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्
इति प्राणायामं जपित्वामेकविंशतिवारं आकारस्य अग्नि ऋषिर्देवी गायत्री
छंदः ब्रह्मा देवता क्लीं बीजं जाग्रत अवस्था भूः स्थानं ऋग्वेदो गार्हपत्याग्निरजो

अंहि आहैपद्धति भवतन्यमद्वरो योगोत्सरे विवोप्रारजो देवीवस्य प्रसे जनवत्तु २

सप्त°ग्र° गुणाःपीतवर्णाःप्रातःसवनंविस्वात्माभुवःपृथ्वीबीजंतत्वस्थितिक्रियार्थेजपेविनियो
१६ गः उकारस्यवायुऋषिःत्रीष्टुप्छंदःविस्नुर्देवताश्रीबीजंस्वाहाशक्तिःयजुर्वेदस्वरूप
न्या माहवत्रिपीग्निःस्थानंअंतरिक्षंदेवोनन्तत्वेस्वनुदात्तस्वरः स्वप्नावस्थाकंठस्थानं
स्थितिक्रियार्थेजपेविनियोगः द्वितीयसवनंमकारस्यरुद्रोऋषिःजगतीछंदः
रुद्रोदेवताह्रींबीजंनामसीशक्तिःसामवेदस्वरूपंदक्षिणाग्निःस्थानंद्यौस्तत्वंस्वरि
तस्वराःतमोगुणाःकृष्णवर्णा तृतीयसवनंप्रज्ञानात्मासुषुप्त्यावस्थामूर्द्धन्यास्था
नंसंहारक्रियार्थेजपेविनियोगः अर्द्धमात्रायागायत्र्याऋषिःविराट्छंदःपुरुषोदेव १६

ताक्रोंबीजेसर्वतुरियावस्थाउँभूर्भुवःस्वःस्थानानिउदात्तअनुदात्तःस्वरितःस्वराःअ
थर्वणावेदसंवर्त्तकोग्निःसर्ववर्णाःसर्वाशिश्चवर्णानिसर्वात्माःपृथिव्यंतरिक्षंद्यौ
स्तत्वंसृष्टिस्थितिसंहारार्थेध्यानक्रियार्थेजपेविनियोगः पश्चाज्जलमध्येअष्टद
लंपद्मंसंचिंत्यतत्रदेवंसपरिवारंस्वहृदयादित्योसकाशात आवाह्यांगेनसकलीक
त्यपंचोपचारंचक्रादिमुद्राभिःमनसाविधाय अमृतबीजेनजलममृतरूपंस्मृत्वामूल
मंत्रेणाभिमंत्र्याष्टोत्तरशततर्पयेत अंगादित्येकैकानिसंतर्पयेत एवंसंतर्पयि
त्वा पुनःपंचोपचारेणामनसाभ्यर्च्य पश्चात्सपरिवारंदेवंहृदयउद्वास्यसंहारविद्या

सत्० ग्र० यप्रणावेनद्वादशवारंजपित्वा जलंशिरसिसंप्रोक्ष्यतथैवावाभिमंत्र्यजलंपश्चाचम्य
१७ तेप्राणायामत्रयंकुर्यात् इतिचत्वारिंसंध्यासमाप्तं अथमानसीकपूजापंचोप
चारविधिः ॐलंपृथिव्यात्मनेपरमात्मनेगंधतन्मात्रप्रकृत्यानंदात्मनेपरमेश्वराय
गंधंपरिकल्पयामिनमः इत्यंगुष्ठयोः ॐहंआकाशात्मनेपरमात्मनेशब्दतन्मात्र
प्रकृत्यानंदात्मनेपरमेश्वरायपुष्पंपरिकल्पयामिनमः इतितर्जन्ययोः ॐयंवाय
व्यात्मनेपरमात्मनेस्पर्शतन्मात्रप्रकृत्यानंदात्मनेपरमेश्वरायधूपंपरिकल्पया
मिनमः इतिमध्यमयोः ॐरंअग्न्यात्मनेपरमात्मने [illegible] मात्रप्रकृत्यानंदा १७

त्मनेपरमेश्वरायदीपंपरिकल्पयामिनमः इतिश्रृनामिकयोः ॐवं व्यानात्मनेपर
मात्मनेरसतत्वमात्राप्रकल्पानंदात्मनेपरमेश्वरायनैवेद्यंपरिकल्पयामिनमः इति
कनिष्ठिकयोः ॐप्राःश्वाप्राणात्मनेपरमात्मनेसर्वतत्वमात्राप्रकल्पानंदात्मनेपरमेश्व
रायतांबूलंपरिकल्पयामिनमः इतिकरतलकरपृष्ठयोः इतिमानसीकपूजाविधा
नसमाप्तं अथमनविश्रामउपनिषद पूर्वदलेश्वेतवर्णीयदाविश्रामतेमनःतदा
धैर्य्यमुदारंचधर्म्मकीर्त्तिमतिर्भवेत १ अग्निदलेरक्तवर्णीयदाविश्रामतेमनः
तदानिद्रालस्यंचमंदाबुधिमतिर्भवेत २ दक्षिणदलेकृष्णवर्णीयदाविश्रामतेम

नः तदाकामक्रोधमत्सरं चमंदाबुधिमतिर्भवेत ३ नैऋत्यदलेनीलवर्णाय
दाविश्रामतेमनः तदाज्वालाप्रज्वालितंजाजुल्यबुधिमतिर्भवेत ४ पश्चिमदलेक
पिलवर्णायदाविश्रामतेमनः तदाक्रीडाहास्यंविनोदं उत्साहंचमतिर्भवेत ५ वा
यव्यदलेश्यामवर्णायदाविश्रामतेमनः तदाचितावृत्तांचैवैराग्यंचमतिर्भवे
त ६ उत्तरदलेपीतवर्णायदाविश्रामतेमनः तदाभोगशृंगारस्यहास्यंचमतिर्भवे
त ७ ईशानदलेगौरवर्णायदाविश्रामतेमनः तदाक्षमाज्ञानंधर्मकीर्तिमति
र्भवेत ८ संधिसंधिमिश्रितवर्णायदाविश्रामतेमनः तदादेहजाड्यंनिद्रंचम

तिर्भवेत् ९ मध्यह्लेस्फटिकवर्णायदाविश्रामतेमनः तदासर्वगुणाज्ञानंचैवतंच
मतिर्भवेत् १० यस्यस्मरणमात्रेणसर्वपापैःप्रमुच्यते यःपठेत्सदाभक्त्यासयाति
परमांगतिं ११ इतिश्रीवेदांतसारमहाविश्रामोपनिषद्संपूर्णं ॐऋग्वेदस्य
स्यप्रज्ञानमानंदब्रह्मअहंब्रह्माहमस्मि यजुर्वेदस्यतत्त्वमसि सामवेदस्यअयंआत्मा
ब्रह्म अथर्वणस्ययत्परंब्रह्मअहंब्रह्मास्मि ॐपृथिव्याप्राणोहमस्मि आपःप्राणो
ऽहमस्मि वायुःप्राणोऽहमस्मि तेजःप्राणोऽहमस्मि आकाशःप्राणोऽहमस्मि कर्ता
प्राणोऽहमस्मि अकर्ताप्राणोऽहमस्मि हरिब्रह्माशिवःवसिष्ठःशक्तिश्चैवपाराशर

सन्न्यं॰त्र॰
१९

व्यासशुकगौडसहितो गोविंदश्चैव शंकरः तीर्थाश्रमवनारण्यगिरिपर्वतसागरः स
रस्वती भारती चैव पुरी नामानि वै दश। कीटवार आनंदवार भूरिवार नेदचैतन्य
स्वरूपप्रकाशः इति चत्वारिंशकं संपूर्णं अथ पंचीकरणं ॐ अविकाराय शुद्धाय नि
त्याय परमात्मने सदैकरूपरूपाय गुरवे प्रभवे विस्नवे जगदंकुरकंदाय सच्चिदानंदमा
यिने गलिताखिलभेदाय नमः शांताय वै च स्येयद्बोधातिदं भाति यद्बोधाद्धि निवर्तते
नमस्तस्मै परमानंदवपुषे परमात्मने अनात्मभूते देहादात्मबुद्धिस्तु देहिनां सावि १९
द्यातत्कृतो बंधस्तन्नाशो मोक्ष उच्यते अथातः परमहंसानां समाधिविधिं व्याख्या

स्यामः सच्छब्दवाच्यमविद्यासबलं ब्रह्मः ब्रह्मणोऽव्यक्तं अव्यक्तान्महत् महतोऽहंकारः अहं
कारात्तं चतन्मात्रेभ्यः पंचमहाभूतानि पंचमहाभूतेभ्योऽखिलंजगत् पंचमहाभूतान
मेकैकं द्विधा विभाज्य स्वार्द्धभागं विहाय इतरेषु पंचधा पंचिकृतं पंचीकरणं भवति अध्या
रोपापवादाभ्यां निःप्रपंचं प्रपंच्यते ॥ पंचीकृतपंचमहाभूतानि तत्कार्यं च सर्वं विराडि
त्युच्यते एतत्स्थूलशरीरमात्मनः इंद्रियैरर्थोपलब्धिर्जाग्रतिं तदुभयाभिमान्यात्मावि
श्वः एतत्त्रयं अकारः ॥ अपंचीकृतपंचमहाभूतानि तत्कार्यं समस्तं सप्तदशकं लिङ्गं भोति
कं हिरण्यगर्भ इत्युच्यते एतत्सूक्ष्मशरीरमात्मनः करणेषूपसंहृतेषु जागरितसंस्का

शत. श्र.
२० र्थप्रत्ययः सविषयः स्वप्नः तदुभयाभिमान्यात्मा तैजसः एतत्त्रयं उकारः उँ शरीरद्वयकार
णमात्माज्ञानं साभासमव्याकृतमित्युच्यते तच्च न सन्नासन्नापि सदसन्न भिन्नाभि
न्नापि भिन्नाभिन्नं कुतश्चित् न निरवयवं न सावयवं नोभयं किंतु केवलं ब्रह्मात्मैकत्वज्ञा
नापोह्यं सर्वप्रकारज्ञानोपसंहारो बुद्धेः कारणात्मनावस्थानं सुषुप्तिः तदुभयाभिमा
न्यात्मा प्राज्ञ एतत्त्रयं मकारः अकार उकारः मकारः ओंकारः ईकारो हमेवाहं साक्षि
केवलं चिन्मात्रस्वरूपोऽहं नाज्ञानं तत्कार्यं च किंतु नित्यशुद्धबुद्धमुक्तसत्यस्वभावः
परमानंदाद्वयं परं ब्रह्मैवाहमस्मि अहं ब्रह्मेत्यभेदेनावस्थानं समाधिस्त्वमस्मि २०

अहंब्रह्मास्मिविज्ञानमानंदंब्रह्मसत्यंज्ञानमनंतंब्रह्मएकमेवाद्वितीयंब्रह्मअयमात्मैवे
दंसर्वं ब्रह्मैवेदंसर्वंसर्वंखल्विदंब्रह्मअयमात्माब्रह्मेत्यादिश्रुतिभ्यः ॐचिंतयेत्अणावा
त्मस्थमात्मज्योतिर्हृदिस्थितंचैतन्यमात्ममस्तुतेसोऽहमस्मीतिनित्यशः तचैकार्य्योपा
धिःचैतन्यंजीवशब्दवाच्यंवाच्यकारणोपाधिचैतन्यंब्रह्मशब्दवाच्यंउभयत्रचैतन्यमात्रं
लक्ष्यं लक्ष्यपदार्थग्रहणसामर्थ्येनअखंडैकरसंभवति कार्य्योपाधिरयंजीवकारणो
पाधिरीश्वरःकार्य्यकारणतांहित्वापूर्णबोधोऽवशिष्यते इतिपंचीकरणंसमाप्तम
अथमहावाक्यार्थमाह प्रबोधात्प्रकारंव्याख्यास्यामः तत्त्वमसीतिसौम्यमहावाक्य

सीतिप्रथमेशिष्यप्रतिज्ञापालयेत्गुरुः तेनतत्त्वमसीत्यस्मिन्वाक्येत्रीणिपदानिभवंति
तत्पदस्यद्वावर्थौवाच्योलक्ष्यश्चेतिमायाशबलंब्रह्म वाच्यार्थः मायाविनिर्मुक्तंस
त्यंज्ञानानंदादिस्वरूपंलक्ष्यं २ त्वंपदस्यापिद्वावर्थौवाच्योलक्ष्यश्चेतिस्थूलसूक्ष्म
श[redacted]रीरद्वयंपरिवेष्टितचैतन्योवाच्योऽर्थः स्थूलसूक्ष्मशरीरद्वयविनिर्मुक्तं
प्रत्यक्चैतन्यंलक्ष्य तत्त्वमसीतिकिमहंभवामितत्त्वमसीत्याऽसीपदेनद्वयोरैक्यंबो
धितेसति संसारिशोकथंभवामीतिविरोधस्फुरणेभवेत् ततः अजहदःजहदः
अजःलक्षणा यासोऽयंदेवदत्तइत्यत्र यथांतद्देशकालपरित्यागेनोभयत्रः २१

देवदत्तस्वरूपमात्रं लक्ष्यते तदुभयभ्रमाकलनपरित्यागेन लक्षणया द्वयोरैक्यमखं-
डत्वात्तत्त्वमस्योर्भवेत् तदखंडैकरसमिति वेदे ध्यते विजातीयस्वजातीयस्व-
गतभेदरहितमित्येकरसं सैंधवघनवद्विज्ञानघनं नित्यशुद्धबुद्धमुक्तसत्य-
स्वभावं निर्गुणं निरवयवं सर्वगतं अवस्थात्रयविनिर्मुक्तमसंगमद्वितीयं ब्रह्म नेदा
द्वयं ब्रह्माहमस्मीति अभेदेनावस्थानं समाधिरेवं महावाक्यार्थमदामदास्य
रतो मुक्तिर्ध्रुवं भवेत् तरति शोकमात्मविदिति श्रुति ॐ ब्रह्मविदाप्नोति परं ब्रह्म
विद्ब्रह्मैव भवति तदेतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति श्रु-

निर्वाण

समम्च° केः मुक्तः वामदेवो ऋषिः अपमन्माभ्यसेति इतिमहावाक्यसंपूर्णं अथनिर्वाण
२१ योगपटमंत्रस्यपदस्मरणादुच्यते वासनाविधिः व्याख्याय परमहंसपरिविराज
कः पश्चिमलिंगः दिव्यशक्तिः मन्मथक्षेत्रपालं शांतस्मसानगगनमहासिद्धांत
अक्षयनिरंजनं अमृतकल्लोलनदीब्रह्मोदकितीर्थनिरसंशय ऋषिः निर्मो
दनातिः कुलप्रतिविधिः निः केवलज्ञानंऊर्ध्वमन्यायनिरालंबपरहंसयोगसा
क्षिः छंदः जपेविनियोगः उपदेशादिक्षासंतोषपवनद्वारशादित्यावलोकनं विवे
कदक्षकरुणावलिध्यानंदंडकौंतगुहामुक्तासन समदृष्टिसमभावसम २२

ह्मीनः अनुभवपरमसिद्धिपरचयपरमानंदस्वरूपगोष्ठिः अकल्पितभिक्षाहंसो
द्वारसर्वभूतहंसोप्रतिपालकः वैराग्यकंथाउदासीनकौपीनउपसमनसीतोसमकं
बलीविचारदंडः ब्रह्मवल्लयोगपटः रूपादयापादुका स्वभिक्षाचरणांकुंडलिनीबं
धः परोपवादोविमुक्तः उन्मनगतिउन्मनिअवस्थाहोमनिवेला आहुतिप्रमाण
सत्यगुरुउपदेशासनत्यप्रकाशः इतिबीजशिवयोगमुद्राखेचरीनिद्राश्रीपरमानंद
तीर्थगुरुपादुकापूजयामि *इतिनिर्वाणयोगपटसमाप्तं* ॐपरमहंसयोगमुद्राखे
चरीनिद्राश्रीपरमानंदतीर्थगुरुपादुकासनायनमः ब्रह्मासनायनमः गरुडास

नायनमः तत्वसिंहासनायनमः सोऽहंकारवैस्रवेनमः श्रीगुरुचरणरतोऽहंमि
त्रोऽहंभैरवोऽहंविस्नुस्वरूपोऽहंशंकरोऽहं आत्मापरिपूर्णोऽहं ऋग्वेदोऽहंयजुर्वे
दोऽहंसामवेदोऽहंअथर्वणोऽहं ननुसिंहासनयोगपटमध्येपरमहंसमंत्र श्री
दत्तात्रयवाक्यसोऽहं ॐपरमहंसः योगपटमंत्रस्यब्रह्मा ऋषिर्भगवान्देवतासोऽहं
शक्तिः परमहंसबीजंवेदचत्वारिध्वनिः स्थूलसूक्ष्मपरमात्मादेवतामोक्षार्थेजपे
विनियोगः ॐगौरीपद्स्वाहाश्रीगुरवेनमः चत्वारिवेदानां ऋग्वेदस्यप्रज्ञानोऽहंब्र
ह्माऽस्मि यजुर्वेदस्यतत्वमसि सामवेदस्यअयमात्माब्रह्म अथर्वणस्यविज्ञान